३ ऋने वा ।

४ चक्षो वाचि क्शांग् ख्यांग् ।

५ नवा परोक्षायाम् ।

६ भृज्जो भर्ज् ।

७ प्राद्दागस्त आरम्भे क्ते ।

८ निविस्वन्ववात् ।

९ स्वरादुपसर्गाद्दस्तिकित्यधः ।

१० दत् ।

११ दोसोमास्थ इः ।

१२ छाशोर्वा ।

१३ शो व्रते ।

१४ हाको हिः क्त्वि ।

१५ धागः ।

१६ यपि चादो जग्ध् ।

१७ घस्लृसनद्यतनीघञचलि ।

१८ परोक्षायां नवा ।

१९ वेर्वय् ।

२० ऋः शृदृप्रः ।

२१ हनो वध आशिष्यञौ ।

२२ अद्यतन्यां वा त्वात्मने ।

२३ इणिकोर्गाः ।

२४ णावज्ञाने गमुः ।

२५ सनीङश्च ।

२६ गाः परोक्षायाम् ।

२७ णौ सन्ङे वा ।

२८ वाऽद्यतनीक्रियातिपत्त्योर्गीङ् ।

२९ अड्धातोरादिर्ह्यस्तन्यां चामाङा ।

३० एत्यस्तेर्वृद्धिः ।

३१ स्वरादेस्तासु ।

३२ स्ताद्यशितोऽत्रो-

णादेरिट्।
३३ तेर्ग्रहादिभ्यः।
३४ गृह्णोऽपरोक्षायां दीर्घः।
३५ वृतो नवा ऽनाशीः सिच्परस्मै च।
३६ इट्सिजाशिषोरात्मने।
३७ संयोगादृतः।
३८ धूगौदितः।
३९ निष्कुषः।
४० क्तयोः।
४१ जॄव्रश्चः क्त्वः।
४२ ऊदितो वा।
४३ क्षुधवसस्तेषाम्।
४४ लुभ्यञ्चेर्विमोहार्चे।
४५ पूङ्क्लिशिभ्यो नवा।
४६ सहलुभेच्छरुषरिषस्तादेः।
४७ इवृधभ्रस्जदम्भश्रियूर्णु भरज्ञपिसनितनिपतिवृद्दरिद्रः सनः।
४८ ऋस्मिपूङञ्जशौकॄगृदृधृप्रच्छः।
४९ हनृतः स्यस्य।
५० कृतचृतनृतच्छृदतृदोऽसिचः सादेर्वा।
५१ गमोऽनात्मने।
५२ स्नोः।
५३ क्रमः।
५४ तुः।
५५ न वृद्भ्यः।
५६ एकस्वरादनुस्वारेतः।
५७ ऋवर्णश्र्यूर्णुगः

कितः।
५८ उवर्णात्।
५९ ग्रहगुहश्च सनः।
६० स्वार्थे।
६१ डीयश्व्यैदितः क्तयोः।
६२ वेटोऽपतः।
६३ सन्निवेरर्दः।
६४ अविदूरेऽभेः।
६५ वृत्तेर्वृत्तं ग्रन्थे।
६६ धृषशसः प्रगल्भे।
६७ कषः कृच्छ्रगहने।
६८ घुषेरविशब्दे।
६९ बलिस्थूले दृढः।
७० क्षुब्धविरिब्धस्वान्तध्वान्तलग्नम्लिष्टफाण्टबाढपरिवृढं मन्थस्वरमनस्तमःसक्ताऽस्पष्टाऽनायासभृशप्रभौ।
७१ आदितः।
७२ नवा भावारम्भे।
७३ शकः कर्म्मणि।
७४ णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्तम्।
७५ श्वसजपवमरुषत्वरसंघुषास्वनामः।
७६ हृषेः केशलोमविस्मयप्रतिघाते।
७७ अपचितः।
७८ सृजिदृशिस्कृस्वराऽत्वतस्तृज्नित्यानिटस्थवः।
७९ ऋतः।
८० ऋवृव्येऽद इट्।

८१ स्क्ऽसृवृभृस्तुद्रुश्रु-
स्रोर्व्यञ्जनादेः
परोक्षायाः ।
८२ घशोकस्वरातः
क्सोः ।
८३ गमहनविदॢलवि-
शदृशो वा ।
८४ सिचोऽञ्जेः ।
८५ धूग्सुस्तोः परस्मै ।
८६ यमिरमिनम्यातः
सोऽन्तश्च ।
८७ ईशीडः सेध्वेस्व-
ध्वमोः ।
८८ कृत्पञ्चकाच्छिदयः ।
८९ दिस्योरीट् ।
९० अदश्चाट् ।
९१ संपरेः कृगः स्सट् ।
९२ उपाद्भूषासम-
वायप्रतियत्नवि-
कारवाक्याऽध्या-
हारे ।
९३ किरो लवने ।
९४ प्रतेश्च वधे ।
९५ अपाच्चतुष्पात्प-
क्षिशुनि हृष्टान्ना-
श्रयार्थे ।
९६ वौ विष्किरो वा ।
९७ प्रात्तुम्पतेर्गवि ।
९८ उदितः स्वरान्नो-
ऽन्तः ।
९९ मुचादितृफदृफगु-
फशुभोऽभः शे ।
१०० जभः स्वरे ।
१०१ रध इटि तु परो-
क्षायामेव ।
१०२ रभोऽपरोक्षाशवि ।
१०३ लभः ।
१०४ आङो यि ।

१०५ उपात्स्तुतौ।

१०६ ञिण्णमोर्वा।

१०७ उपसर्गात् खल्घञोश्च।

१०८ सुदुर्भ्यः।

१०९ नशो धुटि।

११० मस्जेः सः।

१११ अः सृजिदृशोऽकिति।

११२ स्पृशादिसृपो वा।

११३ ह्रस्वस्य तः पित्कृति।

११४ अतो म आने।

११५ आसीनः।

११६ ऋतां क्ङितीर्।

११७ ओष्ठ्यादुर्।

११८ इसासः शासोऽङ्व्यञ्जने।

११९ क्वौ।

१२० आङः।

१२१ य्वोः प्वऽय्व्यञ्जनेलुक्।

१२२ कृतः कीर्त्तिः।

---

## पञ्चमोऽध्यायः।

प्रथमः पादः।

१ आतुमोऽत्यादिः कृत्।

२ बहुलम्।

३ कर्त्तरि।

४ व्याप्ये घुरकेलिमकृष्टपच्यम्।

५ संगतेऽजर्यम्।

६ रुच्याऽव्यथ्यवास्तव्यम्।

७ भव्यगेयजन्यर-
म्यापात्याप्लाव्यं
नवा ।
८ प्रवचनीयादयः ।
९ श्लिषशीङ्स्थासव-
सजनरुहजॄभजेः
क्तः ।
१० आरम्भे ।
११ गत्यर्थाऽकर्मकपि-
बभुजेः ।
१२ अद्यर्थाच्चाधारे ।
१३ क्त्वातुमम् भावे ।
१४ भीमादयोऽपा-
दाने ।
१५ संप्रदानाच्चान्य-
त्रोणादयः ।
१६ असरूपोऽपवादे
वोत्सर्गः प्राक् क्तेः ।
१७ ऋवर्णव्यञ्जनाद्
घ्यण् ।
१८ पाणिसमवाभ्यां
सृजः ।
१९ उवर्णादावश्यके ।
२० आसुयुवपिरपि-
लपित्रपिडिपिदु-
भिचम्यानमः ।
२१ वाऽऽधारेमावास्या ।
२२ संचाय्यकुण्डपा-
य्यराजसूयं क्रतौ ।
२३ प्रणाय्यो निष्का-
मासंमते ।
२४ धाय्यापाय्यसा-
न्नाय्यनिकाय्यमृ-
ड्मानहविर्निवासे ।
२५ परिचाय्योपचा-
य्यानाय्यसमूह्य-
चित्यमग्नौ ।
२६ याज्या दानर्चि ।

२७ तव्यानीयौ ।

२८ य एच्चातः ।

२९ शकितकिचतिय-
तिशसिसहिय-
जिभजिपवर्गात् ।

३० यमिमदिगदोऽनु-
पसर्गात् ।

३१ चरेराङस्त्वगुरौ ।

३२ वर्योपसर्यावद्यप-
ण्यमुपेयर्तुमती-
गर्ह्यविक्रेये ।

३३ स्वामिवैश्येऽर्यः ।

३४ वह्यं करणे ।

३५ नाम्नो वदः
क्यप्च ।

३६ हत्याभूयं भावे ।

३७ अग्निचित्या ।

३८ खेयमृषोद्ये ।

३९ कुप्यभिद्योध्यसि-
ध्यतिष्यपुष्ययु-
ग्याज्यसूर्यं
नाम्नि ।

४० दृवृगूस्तुजुषेति-
शासः ।

४१ ऋदुपान्त्यादकृ-
पिचृहृचः ।

४२ कृवृषिमृजिशंसि-
गुहिदुहिजपो वा ।

४३ जिविपून्यो हलि-
मुञ्जकल्के ।

४४ पदास्वैरिबाह्याप-
क्ष्ये ग्रहः ।

४५ भृगोऽसंज्ञायाम् ।

४६ समो वा ।

४७ ते कृत्याः ।

४८ णकतृचौ ।

४९ अच् ।

५० लिहादिभ्यः ।

५१ ब्रुवः ।

५२ नन्द्यादिभ्योऽनः ।

५३ ग्रहादिभ्यो णिन् ।

५४ नाम्युपान्त्यप्रीकृ-
गृज्ञः कः ।

५५ गेहे ग्रहः ।

५६ उपसर्गादातो
डोऽश्यः ।

५७ व्याघ्राघ्रे प्राणि-
नसोः ।

५८ घ्राध्मापाट्धेदृशः
शः ।

५९ साहिसातिवेद्युदे-
जिधारिपारिचेते-
रनुपसर्गात् ।

६० लिम्पविन्दः ।

६१ निगवादेर्नाम्नि ।

६२ वा ज्वालादिदु-
नीभूग्रहास्रोर्णः ।

६३ अवहृसासंस्रोः ।

६४ तन्व्यधीण्श्वसातः ।

६५ नृत्खन्रञ्जः शि-
ल्पिन्यऽकट् ।

६६ गस्थकः ।

६७ टनण् ।

६८ हः कालव्रीह्योः ।

६९ प्रुसृल्वोऽकः साधौ ।

७० आशिष्यऽकन् ।

७१ तिक्कृतौ नाम्नि ।

७२ कर्मणोऽण् ।

७३ शीलिकामिभ-
क्ष्याचरीक्षिक्षमो
णः ।

७४ गायोऽनुपसर्गा-
ट्टक् ।

७५ सुरासीध्वोः पिबः ।

७६ आतो डोऽह्वावामः ।

७७ समः ख्यः ।

७८ दश्चाङः ।

७९ प्राद् ज्ञश्च ।

८० आशिषि हनः ।

८१ क्लेशादिभ्योऽपात् ।

८२ कुमारशीर्षाण्णिन् ।

८३ अचित्ते टक् ।

८४ जायापतेश्चिह्न-
वति ।

८५ ब्रह्मादिभ्यः ।

८६ हस्तिबाहुकपाटा-
च्छक्तौ ।

८७ नगरादगजे ।

८८ राजघः ।

८९ पाणिघताडघौ
शिल्पिनि ।

९० कुक्ष्यात्मोदरात्
भृगः खिः ।

९१ अर्होऽच् ।

९२ धनुर्दण्डत्सरुला-
ङ्गलाङ्कुशर्ष्टिय-
ष्टिशक्तितोमरघ-
टाद् ग्रहः ।

९३ सूत्राद्धारणे ।

९४ आयुधादिभ्यो
धृगोऽदण्डादेः ।

९५ हृगो वयोऽनुद्यमे ।

९६ आङः शीले ।

९७ हृतिनाथात्
पशाविः ।

९८ रजःफलेमलाद्
ग्रहः ।

९९ देववातादापः ।

१०० सकृत्स्तम्बाद्व-
त्सव्रीहौ कृगः ।

१०१ किंयत्तद्बहोरः ।

१०२ सङ्ख्याऽहर्दिवा-
विभानिशाप्र-
भाभाश्चित्रकर्त्रा-

द्यन्तानन्तकारबह्व-
हरुर्धनुर्नान्दीलि-
पिलिबिबलिभक्ति-
क्षेत्रजङ्घाक्षपाक्ष-
णदारजनिदोषा-
दिनदिवसाट्टः ।

१०३ हेतुतच्छीलानुकू-
ले ऽशब्दश्लोकक-
लहगाथावैरचाटु-
सूत्रमन्त्रपदात् ।

१०४ भृतौ कर्मणः ।

१०५ क्षेमप्रियमद्रभद्रात्
खाण् ।

१०६ मेघर्त्तिभयाभ-
यात्खः ।

१०७ प्रियवशाद्वदः ।

१०८ द्विषन्तपपरन्तपौ ।

१०९ परिमाणार्थमितः
नखात्पचः ।

११० कूलाभ्रकरीषा-
त्कषः ।

१११ सर्वात्सहश्च ।

११२ भृवृजितृतपदमे-
श्चनाम्नि ।

११३ धारेर्धर्च ।

११४ पुरन्दरभगन्दरौ ।

११५ वाचंयमो व्रते ।

११६ मन्याण्णिन् ।

११७ कर्तुः खश् ।

११८ एजेः ।

११९ शुनीस्तनमुञ्जकू-
लास्यपुष्पात् ट्धेः ।

१२० नाडीघटीखरीमु-
ष्टिनासिकावाताद्
ध्मश्च ।

१२१ पाणिकरात् ।

१२२ कूलादुद्रुजोद्वहः ।

१२३ वहाभ्राल्लिहः ।

१२४ बहुविध्वरुस्तिलातुदः ।

१२५ ललाटवातशर्द्धात्तपाऽजहाकः ।

१२६ असूर्योग्राद् दृशः ।

१२७ इरम्मदः ।

१२८ नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्ताच्व्यर्थेऽच्वेर्भुवः खिष्णुखुकञौ ।

१२९ कृगः खनट् करणे ।

१३० भावे चाशिताद् भुवः खः ।

१३१ नाम्नो गमः खड्डौ च विहायसस्तु विहः ।

१३२ सुगदुर्गमाधारे ।

१३३ निर्गो देशे ।

१३४ शमो नाम्न्यः ।

१३५ पार्श्वादिभ्यः शीङः ।

१३६ उदूर्ध्वादिभ्यः कर्तुः ।

१३७ आधारात् ।

१३८ चरेष्टः ।

१३९ भिक्षासेनादायात् ।

१४० पुरोऽग्रतोऽग्रे सर्त्तेः ।

१४१ पूर्वात् कर्तुः ।

१४२ स्थापास्नात्रः कः ।

१४३ शोकापनुदतुन्दपरिमृजस्तम्बेरमकर्णेजपंप्रियालसहस्तिसूचके ।

१४४ मूलविभुजादयः ।

१४५ दुहेर्डुघः ।

१४६ भजो विण् ।

१४७ मन्वन्क्वनिप्वि-
च् क्वचित् ।
१४८ क्विप् ।
१४९ स्पृशोऽनुदकात् ।
१५० अदोऽनन्नात् ।
१५१ क्रव्यात्क्रव्यादा-
वामपक्वादौ ।
१५२ त्यदाद्यन्यसमाना-
दुपमानाद्व्याप्ये
दृशष्टक्सकौ च ।
१५३ कर्तुर्णिन् ।
१५४ अजातेः शीले ।
१५५ साधौ ।
१५६ ब्रह्मणो वदः ।
१५७ व्रताभीक्ष्ण्ये ।
१५८ करणाद्यजो भूते ।
१५९ निन्द्ये व्याप्यादि-
न्विक्रियः ।
१६० हनो णिन् ।
१६१ ब्रह्मभ्रूणवृत्रात्
क्विप् ।
१६२ कृगः सुपुण्यपाप-
कर्ममन्त्रपदात् ।
१६३ सोमात्सुगः ।
१६४ अग्नेश्चेः ।
१६५ कर्मण्यग्न्यर्थे ।
१६६ दृशः क्वनिप् ।
१६७ सहराजभ्यां कृग्-
युधेः ।
१६८ अनोर्जनेर्डः ।
१६९ सप्तम्याः ।
१७० अजातेः पञ्चम्याः ।
१७१ क्वचित् ।
१७२ सुयजोर्ङ्वनिप् ।
१७३ जृषोऽतृः ।
१७४ क्तक्तवतू ।

---

द्वितियः पादः ।

१ श्रुसदवस्भ्यः परोक्षा वा ।

२ तत्र क्वसुकानौ तद्वत् ।

३ वेयिवदनाश्वदनूचानम् ।

४ अद्यतनी ।

५ विशेषाऽविवक्षाव्यामिश्रे ।

६ रात्रौ वसोऽन्त्ययामास्वप्तर्यद्य ।

७ अनद्यतने ह्यस्तनी।

८ ख्याते दृश्ये ।

९ अयदि स्मृत्यर्थे भविष्यन्ती ।

१० वा काङ्क्षायाम् ।

११ कृतास्मरणाऽतिनिन्ह्वे परोक्षा ।

१२ परोक्षे ।

१३ हशश्वद्युगान्तप्रच्छये ह्यस्तनी च।

१४ अविवक्षिते ।

१५ वाऽद्यतनी पुरादौ ।

१६ स्मे च वर्त्तमाना ।

१७ ननौ पृष्टोक्तौ सद्वत् ।

१८ नन्वोर्वा ।

१९ सति ।

२० शत्रानशावेष्यति तु सस्यौ ।

२१ तौ माङ्याक्रोशेषु।

२२ वा वेत्तेः क्वसुः ।

२३ पूङ्यजः शानः ।

२४ वयः शक्तिशीले ।

२५ धारीङोऽकृच्छ्रेऽतृश् ।

२६ सुग्द्विषार्हः सत्रि-

शान्तुस्तुत्ये ।
२७ तृन्शीलधर्म-
साधुषु ।
२८ आज्यऽलङ्कृग्-
निराकृग्भूसहिरु-
चिवृतिवृधिचरि-
प्रजनापत्रप इष्णुः।
२९ उदः पचिपति-
पदिमदेः ।
३० भूजेः ष्णुक् ।
३१ स्थाग्लाम्लापचिप-
रिमृजिक्षेः स्नुः ।
३२ त्रसिगृधिधृषि-
क्षिपः क्नुः ।
३३ सन्भिक्षासंशेरुः ।
३४ विन्द्विच्छू ।
३५ शृवन्देरारुः ।
३६ दाट्धेसिशदस-
दोरुः ।
३७ शीङ्श्रद्धानिद्रा-
तन्द्रादयिपति-
गृहिस्पृहेरालुः ।
३८ डौ सासहिवावहि-
चाचलिपापतिः ।
३९ सस्त्रिचक्रिदधि-
जज्ञिनेमिः ।
४० शृकमगमहनवृष-
भूस्थ उकण् ।
४१ लषपतपदः ।
४२ भूषाक्रोधार्थजुसृ-
गृधिज्वलशुच-
श्चानः ।
४३ चलशब्दार्थाद-
कर्मकात् ।
४४ इङितो व्यञ्जना-
द्यन्तात् ।
४५ न णिङ्यसूददी-
पदीक्षः ।

४६ द्रुमक्रमो यङः।
४७ यजिजपिदंशिवदादूकः।
४८ जागुः।
४९ शमष्टकात् घिनण्।
५० युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहाभ्याहनः।
५१ आङः क्रीडमुषः।
५२ प्राच्च यमयसः।
५३ मथलपः
५४ वेश्च द्रोः।
५५ विपरिप्रात्सर्त्तेः।
५६ समः पृचैपृज्वरेः।
५७ संवेः सृजः।
५८ संपरिव्यनुप्राद्वदः।
५९ वेर्विचकत्थस्रम्भकषकसलसहनः।
६० व्यपाभेर्लषः।
६१ सम्प्राद्वसात्।
६२ समत्यपाभिव्यभेश्चरः।
६३ समनुव्यवाद्रुधः।
६४ वेर्दहः।
६५ परेर्देविमुहश्च।
६६ क्षिपरटः।
६७ वादेश्च णकः।
६८ निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकस्वरात्।
६९ उपसर्गाद्देवृदेविक्रुशः।
७० वृङ्भिक्षिलुण्टिजल्पिकुट्टाट्टाकः।
७१ प्रात्सूजोरिन्।
७२ जीण्दृक्षिविश्रिपरिभूवमाभ्य-

मात्यथः ।
७३ सृघस्यदो मरक् ।
७४ भञ्जिभासिमिदो घुरः ।
७५ वेत्तिच्छिदभिदः कित् ।
७६ भियोरुरुकलुकम् ।
७७ सृजीणनशाङ्वरप् ।
७८ गत्वरः ।
७९ स्मयजसहिंसदीपकम्पकमनमो रः ।
८० तृषिधृषिस्वपो नजिङ् ।
८१ स्थेशभासपिसकसो वरः ।
८२ यायावरः ।
८३ दिद्युद्ददृज्जगज्जुहूवाक्प्राड्धीश्रीद्रूस्रूज्वायतस्तूकटप्रूपरिव्राड्भ्राजादयः क्विपः ।
८४ शंसंस्वयंविप्राद्भुवो डुः ।
८५ पुव इत्रो दैवते ।
८६ ऋषिनाम्नोः करणे ।
८७ लूधूसूखनिचरसहार्त्तेः ।
८८ नीदाम्व्शासूयुयुजस्तुतुदसिसिचमिहपतपानहस्त्रट् ।
८९ हलक्रोडास्ये पुवः ।
९० दंशेस्त्रः ।
९१ धात्री ।
९२ ज्ञानेच्छार्चार्थञीच्छील्यादिभ्यः क्तः ।
९३ उणादयः ।

---

# अथ उणादिसूत्राणि ॥

१ कृवापाजिस्वदिसाध्यशौदृस्नासनिजानिरहीणभ्य उण् ।
२ अः ।
३ म्लेच्छीडेर्ह्रस्वश्च वा ।
४ नञः क्रमिगमिशमिखन्याकमिभ्योडित् ।
५ तुदादिविषिगुहिभ्यः कित् ।
६ विन्देर्न लुक् च ।
७ कृगो द्रु च ।
८ कनिगादिमनेः सरूपे ।
९ ऋतष्टित् ।
१० किच्च ।
११ दृपलिभ्यां टित् पिप् चपूर्वस्य ।
१२ क्रमिमथिभ्यां चन्मनौ च ।
१३ गमेर्जम् च वा ।
१४ अदुपान्त्यऋदभ्यामश्चान्तः ।
१५ मषिमसेर्वा ।
१६ ह्रस्वफलिकषेरा च ।
१७ इदुदुपान्त्याभ्यां किदिदुतौच ।
१८ जजलतितलकाकोलीसरीसृपादयः ।
१९ बहुलं गुणवृद्धी चादेः ।
२० णेर्लुप् ।

२१ भीण्शालिवलि
कल्यतिमर्त्यर्चि-
मृजिकुतुस्तुदा-
धारात्राकापानि-
हानक्शुभ्यः कः।
२२ विचिपुपिमुषिशु-
ष्यविसृवृशुस्तुभू-
धूमूनीवीभ्यः
कित्।
२३ कृगो वा।
२४ द्युयुहिपितुशोर्दी-
र्घश्च।
२५ ह्रियो रश्च लो वा।
२६ निष्कतुरुष्कोदर्का-
लर्कशुल्कश्वफल्क-
किञ्जल्कोल्का-
वृक्कच्छेककेकाय-
स्कादयः।
२७ दृकृनृसृचृधृवृमृस्तु-
कुक्षुलङ्घिचरि-
चटिकटिकण्टिच-
णिचषिफलिव-
मितम्यविदेविब-
न्धिकनिजनिम-
शिक्षारिकूरिवृ-
तिवल्लिमल्लिस-
ल्लयलिभ्योऽकः।
२८ को रुरुण्टिरण्टिभ्यः
२९ ध्रुधून्दिरुचितिलि-
पुलिकुलिक्षिपि-
क्षुपिक्षुभिलिखि-
भ्यः कित्।
३० छिदिभिदिपिटेर्वा।
३१ कृपेर्गुणवृद्धि च वा।
३२ नञः पुंसेः।
३३ कीचकपेचकमेन-
कार्मकधमकवध-
कलघकजहकैरकै-

डकाश्मकलमक-
क्षुल्लकचट्टकाह्व-
कादयः।

३४ शलिबलिपतिवृ-
तिनभिपटितटि-
तडिगडिभन्दिव-
न्दिमन्दिनमिकु-
टुपूमनिखजिभ्य
आकः।

३५ शुभिगृहिविदिपु-
लिगुभ्यः कित्।

३६ पिषेः पिन्पिण्यौ
च।

३७ मवाकश्यामाकवा-
र्ताकघृन्ताकज्यो-
न्ताकगूवाकभ-
द्राकादयः।

३८ क्रीकल्यलिदलि-
स्फटिदूषिभ्य इकः।

३९ आङःपणिपनिप-
दिपतिभ्यः।

४० नसिवसिकसि-
भ्यो णित्।

४१ पापुलिकृषिकुशि-
व्रश्चिभ्यः कित्।

४२ प्राङः पणिपनि-
कषिभ्यः।

४३ मुषेर्दीर्घश्च।

४४ स्यमेः सीम् च।

४५ कुशिकहृदिकम-
क्षिकैतिकपिपी-
लिकादयः।

४६ स्यमिकषिदूष्य-
निमनिमलिवल्य-
लिपालिकणिभ्य
ईकः।

४७ जॄपॄदॄशॄचॄमॄभ्यो
द्रूरश्चादौ।

४८ ऋच्यृजिह्वषीषिहृ-
शिमृडिशिलि-
निलीभ्यः कित् ।

४९ मृदेर्वोऽन्तश्च वा ।

५० सृणीकास्तीकम-
तीकपूतीकसमी-
कवाहीकवाह्लीक-
वल्मीककल्मली-
कतिन्तिडीककङ्क-
णीककिङ्किणीक-
पुण्डरीकचञ्चरीक-
फर्फरीकझर्झरीक-
घर्घरीकादयः ।

५१ मिचभिकटिभ-
ल्लिकुहेरुकः ।

५२ संविभ्यां कसेः ।

५३ कृमेः कृम् च वा ।

५४ कमितिमेर्दोऽन्त-
श्च ।

५५ मण्डेर्मङ्ड् च ।

५६ कण्यणेर्णित् ।

५७ कञ्चुकांशुकनंशु-
कपाकुकाहिवुक-
चिवुकजम्वुकचु-
लुकचूचुकोल्मुक-
भावुकपृथुकमधु-
कादयः ।

५८ मृमन्यञ्जिजलि-
वलितलिमलिम-
ल्लिभालिमण्डि
वन्धिभ्यः ऊकः ।

५९ शल्यणेर्णित् ।

६० कणिभल्लेर्दीर्घश्च
वा ।

६१ शम्बूकशाम्बूक-
वृधूकमधूकोलूको-
रुवूकवरुकादयः ।

६२ किरोऽङ्को रो लश्च

वा।

६३ रालापाकाभ्यः क्तित्।

६४ कुलिचिरिभ्यामि ञ्कक्।

६५ कलेरविङ्कः।

६६ क्रमेरेलकः।

६७ जीवेरातृको जैव् च।

६८ हृभूलाभ्य आणकः

६९ प्रियः कित्।

७० धालूशिङ्घिभ्यः।

७१ शीभीराजेश्चानकः।

७२ अणेर्डित्।

७३ कनेरीनक-।

७४ गुड ईधुकैधुकौ।

७५ वृतेस्तिकः।

७६ कृतिपुतिलतिभिदिभ्यः कित्।

७७ इष्याशिमसिभ्यस्तकक्।

७८ भियो द्रे च।

७९ हृरुहिपिण्डिभ्य ईतकः।

८० कुषेः कित्।

८१ बलिबिलिशलिदमिभ्य आहकः।

८२ चण्डिभल्लिभ्यामातकः।

८३ श्लेष्मातकाम्रातकामिलातकपिष्टातकादयः।

८४ शमिमनिभ्यां खः।

८५ इयतेरिच्च वा।

८६ पूमुहोः पुन्मूरौ च।

८७ अशेर्डित्।

८८ उषेः किल्लुक् च।

८९ महेरुच्चास्य वा।

९० न्युङ्खादयः ।

९१ मयेधिभ्यामूखे-
खौ ।

९२ गम्यमिरम्यजि-
गद्यदिछागडि-
खडिगृभृघृस्वृभ्यो-
गः ।

९३ पूमुदिभ्यां कित् ।

९४ भृवृभ्यांनोऽन्तश्च ।

९५ द्रमो णिद्वा ।

९६ शृङ्गशार्ङ्गादयः ।

९७ तडेरागः ।

९८ पतितमितृपृकृशृ
ल्वादेरङ्गः ।

९९ सृवृनृभ्यो णित् ।

१०० मनेर्मन्मातौ च ।

१०१ विडिविलिकुरि-
मृदिपिच्चिभ्यः
कित् ।

१०२ स्फुलिकलिपल्या-
दृभ्यइङ्गक् ।

१०३ भलेरिदुतौ चातः ।

१०४ अर्देणित् ।

१०५ उञ्चिलिङ्गादयः ।

१०६ माङस्तुलेरुङ्गक् ।

१०७ कमितमिशमि-
भ्यो डित् ।

१०८ सर्तेः सुर्च ।

१०९ स्थार्तिजनिभ्यो
घः ।

११० मघाघङ्घाघदी-
र्घादयः ।

१११ सर्तेरघः ।

११२ कूपूसमिणभ्यश्चट्
दीर्घश्च ।

११३ कूर्चचूर्चादयः ।

११४ कल्यविमदिमणि-
कुकणिकुटिकृभ्यो-
ऽचः ।

११५ क्रकचादयः ।

११६ पिशेराचक् ।

११७ मृत्नपिभ्यामिचः ।

११८ म्रियतेरीचण् ।

११९ लषेरुचः कश्च ।

१२० गुडेरूचट् ।

१२१ सिवेर्डित् ।

१२२ चिमेर्डो चडश्चौ ।

१२३ कुटिकुलिकल्युदिभ्यइश्चक् ।

१२४ तुदिमदिपद्यदिगुगभिकचिभ्यच्छक् ।

१२५ पीपूङो ह्रस्वश्च ।

१२६ गुलुञ्छपिलिपिञ्छैधिच्छादयः ।

१२७ वियो जक् ।

१२८ पुवः पुन् च ।

१२९ कुवः कुव् कुनौ च ।

१३० कुटेरजः ।

१३१ भिषेर्भिषभिष्णौ च वा ।

१३२ मुर्वैर्मुर् च ।

१३३ बलेर्वोन्तश्च ।

१३४ उटजादयः ।

१३५ कुलेरिजक् ।

१३६ कृगोऽञ्जः ।

१३७ ह्रमेर्ञ्जः ।

१३८ लुपेष्टः ।

१३९ नमितनिजनिवनिसनो लुक् च ।

१४० जनिपणिकिजुभ्यो दीर्घश्च ।

१४१ घटाघाटाघण्टादयः ।

१४२ दिव्यविश्रुकुकविंशाकिकङ्किकृपिचपिचमिकर्येधिकर्किमर्किकखि-

तृकृसृभृवृभ्योऽटः।

१४३ कुलिचिलिभ्यां कित्।

१४४ कपटकीकटादयः।

१४५ अनिशृपृवृललिभ्य आटः।

१४६ सृसृपेः कित्।

१४७ किरो लश्च वा।

१४८ कपाटविराटशृङ्गाटप्रपुन्नाटादयः।

१४९ चिरेरिटो भ् च।

१५० टिण्टश्चर् च वा।

१५१ तृकृकृपिकम्पिक्लृपिभ्यः कीटः।

१५२ खञ्जेररीटः।

१५३ गृजृदृवृभृभ्य उट उडश्च।

१५४ मङ्केर्मकमुकौ च।

१५५ नर्कुटकुक्कुटोत्कुरुटमुरुटपुरुटादयः।

१५६ दुरो द्रः कूटश्च दुर् च।

१५७ वन्धेः।

१५८ चपेरेटः।

१५९ ग्रो णित्।

१६० कृशाकृशाखेरोटः।

१६१ कपोटवकोटाक्षोटकर्कोटादयः।

१६२ वनिकणिकाश्युषिभ्यष्ठः।

१६३ पीविशिकुणिपृषिभ्य कित्।

१६४ कुषेर्वा।

१६५ शमेर्लुक् च वा।

१६६ पण्डैधिठादयः।

१६७ मृजृशृकम्यमिरमिरपिभ्योऽठः।

१६८ पञ्चमात् डः।

१६९ कण्यणिखनिभ्यो णिद्वा ।

१७० कुगुहुनीकुणितुणिपुणिमुणिशुन्यादिभ्यः कित् ।

१७१ ऋसृतृन्यालिह्यविचमिवमियमिचुरिकुहेरडः ।

१७२ विहडकहोडकुरडकेरडक्रोडादयः ।

१७३ जृकृतृशॄसृभृवृभ्योऽण्डः ।

१७४ पूगो गादिः ।

१७५ वनेस्त च ।

१७६ पिचण्डैरण्डस्वरण्डादयः ।

१७७ लगेरुडः ।

१७८ कुशेरुण्डक् ।

१७९ शमिषणिभ्यां ढः ॥

१८० कुणेः कित् ।

१८१ नञः सहेः षा च ।

१८२ इणुर्विंशावेणिपृकृवृतृजृहसापिपणिभ्यो णः ।

१८३ घृवीह्वाशुष्युषितृषिकृष्यर्तिभ्यः कित् ।

१८४ द्रोर्वा ।

१८५ स्थाक्षुतोरूच्च ।

१८६ भ्रूणतृणगुणकार्णतीक्ष्णश्लक्ष्णाभीक्ष्णादयः ।

१८७ लृकृशॄपॄभृवृश्रुरुरुहिलक्षिविचक्षिचुक्किवुक्कितङ्क्ष्यङ्गिमङ्किकङ्किचरिसमीरेरणः ।

१८८ कॄगॄपॄकृपिवृषिभ्यः कित्।

१८९ धृषिवहेरिचोपान्त्यस्य।

१९० चिक्कणकुक्कणकृकणकुङ्कणत्रवणोल्वणोरणलवणवङ्क्षणादयः।

१९१ कृपिविपिवृषिधृषिमृषियुपिद्रुहिग्रहेराणक्।

१९२ पषो णित्।

१९३ कल्याणपर्याणादयः।

१९४ द्रुहवृहिदक्षिभ्य इणः।

१९५ ऋद्रुहेः कित्।

१९६ ऋकॄवॄधॄदारिभ्य उणः।

१९७ क्षः कित्।

१९८ भिक्षुणी।

१९९ गादाभ्यामेष्णक्।

२०० दम्यमितमिमावापूधूगॄजहसिवस्यसिवितसिमसीण्भ्यस्तः।

२०१ ह्रीरीभूदूसूघृपाधागृचित्यर्त्यञ्जिपसिमुसिवुसिविसिरमिधुर्विपूर्विभ्यः कित्।

२०२ लूञ्शो वा।

२०३ सुसितनितुसेर्दीर्घश्च वा।

२०४ पुतपित्तनिमित्तोतशुक्तातिक्तलिप्तसूरतमुहूर्त्तादयः

२०५ कृगो यङः।

२०६ इवर्णादिर्लुपि ।
२०७ हृपृभृमृशीयजिखलिवलिपर्विपच्यमिनमितमिहृशिहृर्यिकङ्किभ्योऽतः ।
२०८ पृषिरञ्जिजसिकिकालावृभ्यः कित् ।
२०९ कृवृकल्यलिचिलिविलीलिलानाथिभ्य आतक् ।
२१० हृश्यारुहिश्रोणिपलिभ्य इतः ।
२११ नञ आपेः ।
२१२ कुशिपिशिपृषिकुषिकुस्युचिभ्यः कित् ।
२१३ हृग ईतण् ।
२१४ अदो भुवो डुतः ।
२१५ कुलिभयिभ्यामूतक् ।
२१६ जीवेर्मश्च ।
२१७ कबेरोतः प् च ।
२१८ आस्फायेर्डित् ।
२१९ जृविशिभ्यामन्तः ।
२२० रुहिनन्दिजीविप्राणिभ्यष्छिदाशिषि ।
२२१ तृजिभूवदिवहिवसिभास्यदिसाधिमदिगडिगण्डिमण्डिनन्दिरेविभ्यः ।
२२२ सीमन्तहेमन्तभदन्तदुष्यन्तादयः ।
२२३ शकेरून्तः ।
२२४ कषेर्डित् ।
२२५ कमिप्रुगार्तिभ्यस्थः

२२६ अवादू गोऽच्च वा।
२२७ नीनूरमिलृतुदिवचिरिच्चिसिच्चिश्विह्रनिपागोपावोङ्काभ्यः कित्।
२२८ न्युदूभ्यां शीङः।
२२९ अवभृनिर्ऋसमिण्भ्यः।
२३० सर्तेर्णित्।
२३१ पथयूथगूथकुथतित्थनिथसूरथादयः।
२३२ भृशीशापिशमिगमिरमिवन्दिवश्चिजीविप्राणिभ्योऽथः।
२३३ उपसर्गाद् वसः।
२३४ विदिभिदिरुदिदुहिभ्यः कित्।
२३५ रोर्वा।
२३६ जूवृभ्यामूथः।
२३७ शाशपिमनिकनिभ्यो दः।
२३८ आपोऽप् च।
२३९ गोः कित्।
२४० वृतुकुसुभ्यो नोऽन्तश्च।
२४१ कुसेरिदेदौ।
२४२ इङ्र्यर्विभ्यामुदः।
२४३ ककेर्णिद्वा।
२४४ कुमुदबुद्‌बुदादयः।
२४५ ककिमकिभ्यामन्दः।
२४६ कल्यलिपुलिकुरिकुणिमणिभ्य इन्दक्।
२४७ कुपेर्व च वा।
२४८ पृपलिभ्यां णित्।
२४९ यमेरुन्दः।

२५० मुचेर्ड्कुन्दकुकुन्दौ।
२५१ स्कन्धमिभ्यां धः।
२५२ नेः स्यतेरधक्।
२५३ मङ्गेर्नलुक् च।
२५४ आरगेर्वधः।
२५५ पराच्छ्रो डित्।
२५६ इषेरुधक्।
२५७ कोरन्धः।
२५८ ध्याधापन्यनिस्वदिस्वपिवस्यज्यतिसिविभ्यो नः।
२५९ षसेर्णित्।
२६० रसेर्वा।
२६१ जीणशीदीवुध्यविमीभ्यः।
२६२ सेर्वा।
२६३ सोरू च।
२६४ रमेस्त च।
२६५ क्रुशेर्वृद्धिश्च।
२६६ द्युसुनिभ्यो माङो डित्।
२६७ शीङः सन्वत्।
२६८ दिननग्नफेनचिह्नब्रध्नधेनस्तेनच्यौकनादयः।
२६९ स्वसिरसिरुचिजिमस्जिदेविस्यन्दिचन्दिमन्दिमण्डिमदिदहिवह्यादेरनः।
२७० अशो रश्चादौ।
२७१ उन्देर्न लुक च।
२७२ हनेर्घतजधौ च।
२७३ तुदादि वृजिरञ्जिनिधाभ्यः कित्।
२७४ सूधूभूभ्रस्जिभ्यो वा।

२७५ विदनगगनगह-
नादयः।
२७६ संस्तुस्पृशिमन्थे-
रानः।
२७७ युयुजियुधिवुधिस्पृ-
शिहृशीशिभ्यः
कित्।
२७८ मुमुचानयुयुधान-
शिश्विदानजुहु-
राणजिह्रियाणाः।
२७९ ऋञ्जिरञ्जिमन्दि
सह्यर्हिभ्योऽसानः।
२८० रुहियजेः कित्।
२८१ वृधेर्वा।
२८२ श्याकठिखलिन-
ल्यविकुण्डिभ्य
इनः।
२८३ वृजितुहिपुलिपु-
टिभ्यः कित्।
२८४ विपिनाजिनादयः।
२८५ महेर्णिद्वा।
२८६ खलिहिंसिभ्या-
मीनः।
२८७ पठेर्णित्।
२८८ यम्यजिशक्यर्जि-
शीयजितृभ्य
उनः।
२८९ लषेः श च।
२९० पिशिमिथिक्षुधि-
भ्यः कित्।
२९१ फलेर्गोऽन्तश्च।
२९२ वीपतिपटिभ्य-
स्तनः।
२९३ पृपूभ्यां कित्।
२९४ कृत्यशौभ्यां स्नक्।
२९५ अर्तेः शसानः।
२९६ भापाचणिचमिवि-
षिसृपृतृशीतल्य-

लिशमिरभिव-
पिभ्यः पः ।

२९७ गुसुकुरुतुच्युस्त्वा
देरूच ।

२९८ कॄगॄसॄभ्य ऊर्
चान्तस्य ।

२९९ शदिबाधिखनि-
हनेः ष च ।

३०० पम्पाशिल्पादयः।

३०१ क्षुचुपिपूभ्यः कित्।

३०२ नियो वा ।

३०३ उभ्यवेर्लुक् च ।

३०४ दलिवलितलिख-
जिध्वजिकचि-
भ्योऽपः ।

३०५ भुजिकुतिकुटिवि-
टिकुणिकुष्युषि-
भ्यः कित् ।

३०६ शंशेः श इच्चातः ।

३०७ विष्टपोलपवात-
पादवः ।

३०८ कलेरापः ।

३०९ विशेरिपक् ।

३१० दलेरीपो दिल् च ।

३११ उडेरुपक् ।

३१२ अश ऊपः पश्च ।

३१३ सर्तेः षपः ।

३१४ रीशीभ्यां फः ।

३१५ कलिगलेरस्योच ।

३१६ शफकफशिफा-
शोफादयः ।

३१७ वलिनितनिभ्यां
बः ।

३१८ शम्यमेर्णिद्वा ।

३१९ शल्यलेरुच्चातः ।

३२० तुम्बस्तम्बादयः ।

३२१ कुकडिकटि
वटेरम्बः ।

३२२ कदेर्णिद्वा।
३२३ शिलविलादेःकित्
३२४ हिण्डिविलेः किम्यो न लुक् च।
३२५ डीनीवन्धिवृधिचलिभ्यो डिम्बः।
३२६ कुट्युन्दिचुरितुरिपुरिमुरिकुरिभ्यः कुम्बः।
३२७ गृदृरमिहनिजन्यतिदलिभ्यो भः।
३२८ इणः कित्।
३२९ कृशृगृशलिकलिकडिगर्दिरासिरभिचडिवल्लेरभः।
३३० सनेर्डित्।
३३१ ऋषिवृषिल्लसिभ्यः कित्।
३३२ सिटिकिभ्यामिभः सैरटिट्टौ च।
३३३ ककेरुभः।
३३४ क्रुकेः कोऽन्तश्च।
३३५ दमो दुण्ड् च।
३३६ कृकलेरम्भः।
३३७ काकुसिभ्यां कुम्भः।
३३८ अर्तीरिस्तुसुहुसृघृधूस्तृक्षियक्षिभावाव्याधापायावलिपदिनीभ्यो मः।
३३९ ग्रसिहाग्भ्यां ग्राजिह्मौ च।
३४० विलिभिलिसिधीन्धिधूसूशाध्यारुसिविशुषिमुषीप्सिसुहियुधिदसिभ्यः कित्।

३४१ क्षुहिभ्यां वा ।
३४२ अवेर्हस्वश्च वा ।
३४३ सेरी च वा ।
३४४ भियः षोऽन्तश्च वा ।
३४५ तिजियुजेर्ग् च ।
३४६ रुक्मग्रीष्मकूर्मसूर्मजालमगुल्मग्रोमपरिस्तोमसूक्ष्मादयः ।
३४७ सृपृग्रथिचरिकडिकर्दरमः ।
३४८ अवेर्ध् च वा ।
३४९ कुट्टिवेष्टिपूरिरिपिषिसिञ्चिगण्यर्पिवृमहिभ्य इमः ।
३५० वयिमखञ्चिमादयः
३५१ उद्धटिकुल्यलिकुथिकुरिकुटिकुडिकुसिभ्यः कुमः ।
३५२ कुन्दुमलिन्दुमकुङ्कुमविद्रुमपद्रुमादयः ।
३५३ कुथिगुधेरूमः ।
३५४ विहाविशापचिभिद्यादेः केलिमः ।
३५५ दो डिमः ।
३५६ डिमेः कित् ।
३५७ स्थाछामासासूमन्यनिकनिषसिपलिकलिशलिशीकीर्ष्यसहिबन्धिभ्यो यः ।
३५८ नञो हलिपतेः ।
३५९ सञ्जेर्ध् च ।
३६० मृशीपसिवस्यनिभ्यस्तादिः ।
३६१ ऋशिजनिपुणिकृ-

तिभ्यः कित्।
३६२ कुलेर्ड् च वा।
३६३ अगपुलाभ्यां स्तम्भेर्डित्।
३६४ शिक्यास्याढ्यमध्यविन्ध्यधिष्ण्याघन्यहर्म्यसत्यनित्यादयः।
३६५ कुगुवलिमलिकणितन्याभ्यक्षेरयः
३६६ चायेः केक् च।
३६७ लादिभ्यः किल्।
३६८ कसेरलादिरिचास्य।
३६९ वृङः शषौ चान्तौ।
३७० गयहृदयादयः।
३७१ मुचेर्घयघुयौ।
३७२ कुलिलुलिकलिकषिभ्यः कायः।
३७३ श्रुदक्षिगृहिस्पृहिमहेराय्यः।
३७४ दधिषाय्यदीधीषाय्यौ।
३७५ कौतेरियः।
३७६ कृगः कित्।
३७७ मृजेर्णालीयः।
३७८ वेतेस्तादिः।
३७९ धाग्राजिशृरमियाज्यर्तेरन्यः।
३८० हिरण्यपर्जन्यादयः।
३८१ वदिसहिभ्यामान्यः।
३८२ वृङ एण्यः।
३८३ मदेः स्यः।
३८४ रुचिभुजिभ्यां किष्यः।
३८५ वच्यर्थिभ्यामुष्यः।

३८६ वचोऽथ्य उत् च।

३८७ भीवृधिरुधिवज्य-
गिरमिवमिवपिज-
पिशकिंस्फायिव-
न्दीन्दिपदिमदिम-
न्दिचन्दिदसिघ-
सिनसिहस्यसि-
वासिदहिस-
हिभ्यो रः।

३८८ ऋज्यजितञ्चिवञ्चि-
रिपिसृपितृपिदृपि-
चुपिक्षिपिक्षुपि-
क्षुदिमुदिरुदिछि-
दिभिदिखिद्युन्दि-
दम्भिशुभ्युम्भि-
दंशिचिसिवहि-
विसिवसिशुचि-
सिधिगृधिवीन्धि-
श्वितिवृतिनीशी-
सुसूभ्यः किंत्।

३८९ इण्धागृभ्यां वा।

३९० चुम्बिकुम्बितुम्बे-
र्नलुक् च।

३९१ भन्देर्वा।

३९२ चिजिशुसिमित-
म्यम्यर्देर्दीर्घश्च।

३९३ चकिरमिविकसेरु-
च्चास्य।

३९४ शादेरूच्च।

३९५ कृतेः कृकृच्छ्रौ च।

३९६ खुरक्षुरदूरगौरवि-
प्रकुप्रभ्वभ्राभ्रधूम्रा-
न्ध्ररन्ध्रशिलिन्ध्रौ-
ड्रपुण्ड्रतीव्रनीव्रशी-
घ्रोग्रतुग्रभुग्रनिद्रा-
तन्द्रासान्द्रगुन्द्रा-
रिज्रादयः।

३९७ ऋच्छिचटिवटिकु-

टिकठिवठिमञ्च-
डिशीकृशीभृकदि-
षदिकन्दिमन्दि-
सुन्दिमन्थिमञ्जि
पञ्जिपिञ्जिकमि-
समिचमिवमिभ्र-
म्यमिदेविवासि-
कास्यर्तिजीविव-
र्विकुशुदोररः।
३९८ अवेर्घ् च वा।
३९९ मृद्युन्दिपिठिकुरि
कुहिभ्यः कित्।
४०० शाखेरिदेतौ चातः।
४०१ शपेः फ् च।
४०२ दमेर्णिद्वा दश्च डः।
४०३ जठरकरमकरशं-
करकर्परकूर्परतो-
मरपामरप्रामर-
प्राञ्जरसगरनगर-
तगरोर्दरादरशद-
रहृदरकृकरकुकुन्द-
रगोर्वराम्बरमुख-
रखरडहरकुञ्जरा-
जगरादयः।
४०४ मुदिगूरिभ्यां टिद्-
गजौ चान्तौ।
४०५ अग्यङ्गिमदिम-
न्दिकडिकसिका-
सिमृजिकञ्जिक-
लिमलिकचिभ्य
आरः।
४०६ त्रः कादिः।
४०७ कृगो मादिश्च।
४०८ तुषिकुठिभ्यां
कित्।
४०९ कमेरत उच्च।
४१० कनेः कोविदकर्बु-
दकाञ्चनाश्च।

४११ द्वारशृंगारभृंगारकल्हारकान्तारकेदारखारडादयः।

४१२ मदिमन्दिचन्दिपदिखदिसहिवहिकृसृभ्य इरः।

४१३ शवशशोरिच्चातः।

४१४ अन्थेः शिथ् च।

४१५ अशेर्णित्।

४१६ शुषीषिबन्धिरुधिरुचिमुचिमुहिमिहितिमिमुदिखिदिच्छिदिभिदिस्थाभ्यः कित्।

४१७ स्थविरपिठिरस्फिराजिरादयः।

४१८ कृगॄपॄगृमञ्जिकुटिकटिपटिकण्डिशौण्डिहिंसिभ्य ईरः।

४१९ घसिवशिपुटिकुरिकुलिकाभ्यः कित्।

४२० कशेर्मोऽन्तश्च।

४२१ वनिवपिभ्यांणित्।

४२२ जम्बीराभीरगभीरगम्भीरकुम्भीरभडीरभण्डीरडिण्डीरकिर्मीरादयः।

४२३ वाश्यसिवासिमसिमथ्युन्दिमन्दिचतिचङ्कयङ्किकर्बिचकिबन्धिभ्य उरः।

४२४ मङ्केर्नलुक् वोच्चास्य।

४२५ विधेः कित्।

४२६ श्वशुरकुकुन्दुरदर्दुरनिचुरप्रचुरचि-

कुरकुकुरकुक्कुर-
कुर्कुरशर्कुरनूपुर-
निष्ठुरविथुरम-
द्गुरवागुरादयः ।

४२७ मीमसिपशिख-
टिखडिखर्जिक-
र्जिसर्जिकृपिवल्लि-
मण्डिभ्य ऊरः ।

४२८ महिकणिचण्य-
णिपल्यलितलि-
मलिशलिभ्यो
णित् ।

४२९ स्थाविडेः कित् ।

४३० सिन्दूरकर्च्चूरप-
त्तूरधुत्तूरादयः ।

४३१ कुगुपतिकथिकुथि-
कठिकुठिकुटिग-
डिगुडिमुदिमूलि-
दंशिभ्यः केरः ।

४३२ शतेरादयः ।

४३३ कठिचकिसहिभ्य
ओरः ।

४३४ कोरचोरमोरकि-
शोरघोरहोरादो-
रादयः ।

४३५ किशृवृभ्यः करः ।

४३६ सूपुषिभ्यां कित् ।

४३७ अनिकाभ्यां तरः ।

४३८ इणपूभ्यां कित् ।

४३९ मीज्यजिमामद्य-
शौवसिकिभ्यः
सरः ।

४४० कृधूतन्यृषिभ्यः
कित् ।

४४१ कृगृशृदृवृगृचति-
खटिकटिनिषदि-
भ्यो वरट् ।

४४२ अश्नोतेरीघादेः ।

४४३ नीमीकुतुचेर्दीर्घश्च ।

४४४ तीवरधीवरपीवरछित्वरछत्वरगह्वरोपह्वरसंयद्वरोदुम्बरादयः ।

४४५ कडेरेवराङ्गरौ ।

४४६ त्रट् ।

४४७ जिभृसृभ्रस्जिगमिनमिनश्यसिहनिविषेर्वृद्धिश्च ।

४४८ दिवेर्द्यौ च ।

४४९ सूमूखन्युषिभ्यः कित् ।

४५० स्त्री ।

४५१ हुयामाश्रुवसिभसिगुवीपचिवचिघृयम्यमिमानितनिसदिछादिक्षिक्षदिलुपिपतिधूभ्यस्त्रः ।

४५२ श्वितेर्वश्च मो वा ।

४५३ गमेरा च ।

४५४ चिमिदिशंसिभ्यः कित् ।

४५५ पुत्रादयः ।

४५६ वृग्नक्षिपचिवच्यमिनमिवमिवपिबधियजिपतिकडिभ्योऽत्रः ।

४५७ सोर्विदः कित् ।

४५८ कृतेः कृन्त् च ।

४५९ बन्धिवहिकठ्यश्यादिभ्य इत्रः ।

४६० भूगृवदिचरिभ्यो णित् ।

४६१ तनितूलापात्रादिभ्य उत्रः ।

४६२ शामाश्याशक्य-
भ्यमिभ्यो लः ।
४६३ शुकशीमूभ्यः कित्
४६४ भिल्लाच्छभल्लसो-
विदल्लादयः ।
४६५ मृदिकन्दिकुण्ड-
मण्डमङ्गिपटि-
पाटिशकिकेचूद्रे-
वृकमियमिशलि-
कलिपलिगुध्व-
श्विचश्विचपिवहि-
दिहिकुहितृसृपि-
शितुसिकुस्यनि-
द्रमेरलः ।
४६६ नहि लङ्केर्दीर्घश्च ।
४६७ ऋजनेर्गोऽन्तश्च ।
४६८ तृपिवपिकुपिकु-
शिकुटिवृपिमुसि-
भ्यः कित् ।
४६९ कोर्वा ।
४७० शमेर्ब च वा ।
४७१ छो डग्गादिर्वा ।
४७२ मृजिखन्याहनि-
भ्यो डित् ।
४७३ स्थोवा ।
४७४ मुरलोरलविरल-
केरलकपिञ्जल-
कज्जलेज्जलकोम-
लभूमलसिंहल-
काहलशूकलपा-
कलयुगलभगल-
विदलकुन्तलोत्प-
लादयः ।
४७५ ऋकुमृवृतनितमि-
चषिचपिकपिकी-
लिपलिबलिपश्वि-
मङ्गिगण्डिमण्डि-
चण्डितण्डिपि-
ण्डिनन्दिनदि

शाकिभ्य आलः ।

४७६ कूलिपिलिविशिबिडिमृडिकुणिपीप्रीभ्यः कित् ।

४७७ भजेः कणौ च ।

४७८ सर्तेर्गोऽन्तश्च ।

४७९ पतिकूलूभ्यो णित् ।

४८० चात्वालकङ्कालहिन्तालवेतालजम्बालशब्दालममाशालादयः ।

४८१ कल्यनिमहिद्रमिजटिभटिकुटिचण्डिशण्डितुण्डिपिण्डिभूकुकिभ्य इलः ।

४८२ भण्डेर्न लुक् च वा ।

४८३ गुपिमिथिग्रुभ्यः कित् ।

४८४ स्थण्डिलकपिलविचकिलादयः ।

४८५ हृषिवृतिचटिपटिशकिशङ्कितण्डिमङ्गयुत्कपिठभ्य उलः ।

४८६ स्थावङ्किबंहिविन्दिभ्यः किन्न लुक् च ।

४८७ कुमुलतुमुलनिचुलवञ्जुलमञ्जुलपृथुलविशंस्थुलाङ्गुलमुकुलशष्कुलादयः ।

४८८ पिञ्जिमञ्जिकण्डिगण्डिबलिवधिवञ्चिभ्य ऊलः ।

४८९ तमेर्वोऽन्तो दीर्घस्तु वा ।

४९० कुलिपुलिकुशिभ्यः कित् ।

४९१ दुकूलकुकूलबब्बूल लाङ्गुलशार्दूलादयः।

४९२ महेरेलः ।

४९३ कटिपटिकण्डि-गण्डिशकिकपि चहिभ्य ओलः ।

४९४ ग्रह्यादिभ्यः कित् ।

४९५ पिञ्छोलकल्लोलक-ङ्कोलमङ्कोलादयः ।

४९६ वलिपुषेः कलक् ।

४९७ मिगः खलश्चैच्च ।

४९८ श्रो नोऽन्तो ह्रस्वश्च

४९९ शमिकमिपलिभ्यो बलः ।

५०० तुल्वलेल्वलादयः ।

५०१ शीङ्स्तलकपाल-वालण्वलपवलाः।

५०२ रुचिकुटिकुषिक-शिशालिद्रुभ्यो-मलक् ।

५०३ कुशिकमिभ्यां कुलक्कुमौच ।

५०४ पतेः सलः ।

५०५ लटिखटिखलि-नलिकण्यशौसृ-शृकृगृदृपशापि-श्याशालापदि-ह्रसीण्भ्यो वः ।

५०६ शीङापो ह्रस्वश्च वा ।

५०७ उर्दैर्घ च ।

५०८ गन्धेरर्चान्तः ।

५०९ लषेर्लिष् च वा ।

५१० सलेर्णिद्वा ।

५११ निघृषीष्यृषिश्रु-प्रुषिकिणिविशि-

विल्यविपृभ्यः
कित्।
५१२ नञो भुवो डित्।
५१३ लिहेर्जिह्व च।
५१४ प्रह्वाह्वायह्वास्वच्छे-
वाग्रीवामीवा-
ऽवादयः।
५१५ वडिवटिपेलृचणि-
पणिपल्लिवल्लेरवः।
५१६ मणिवसेणित्।
५१७ मलेर्वा।
५१८ कितिकुडिकुरि-
मुरिस्थाभ्यः कित्।
५१९ कैरवभैरवमुत-
वकारण्डवादीन-
वादयः।
५२० शृणातेरावः।
५२१ प्रथेरिवट् पृथ् च।
५२२ पलिसचेरिवः।
५२३ स्पृशेः श्वः पार्श्च।
५२४ कुडितुड्यडेरुवः।
५२५ नीह्विण्ध्यैप्यापा-
दामाभ्यस्त्वः।
५२६ कृजन्येधिपाभ्यः
इत्वः।
५२७ पादावम्यमिभ्यः
शः।
५२८ कृवृभृवनिभ्यः
कित्।
५२९ कोर्वा।
५३० क्लिशः के च।
५३१ उरेरशक्।
५३२ कलेष्टित्।
५३३ पलेराशः।
५३४ कनेरीश्चातः।
५३५ कुलिकनिकणिप-
लिवडिभ्यः
किशः।

५३६ वलेर्णिद्वा ।
५३७ तिनिशेतिशादयः।
५३८ मस्ज्यङ्क्भ्यामुशः।
५३९ अर्तीण्भ्यां पिशातशौ ।
५४० वृकृतॄमीङ्माभ्यः षः ।
५४१ योरुच्च वा ।
५४२ स्नुपूसॄम्वर्कल्रूभ्यः कित् ।
५४३ श्लिपेः शे च ।
५४४ कोरषः ।
५४५ युजलेराषः ।
५४६ अर्पेरिषः ।
५४७ मह्याविभ्यां टित् ।
५४८ रुहेर्वृद्धिश्च ।
५४९ अमिमॄभ्यां णित् ।
५५० तवेर्वा ।
५५१ कलेः किल्व् च ।
५५२ नञो व्यथेः ।
५५३ कृतॄभ्यामीषः ।
५५४ ऋजिशॄपॄभ्यः कित् ।
५५५ अमेर्वरादिः ।
५५६ उषेर्णोऽन्तश्च ।
५५७ ऋपॄनहिहनिकलिचलिचपिवपिकृपिहयिभ्य उषः ।
५५८ विदिपॄभ्यां कित् ।
५५९ अपुषधनुषादयः ।
५६० खलिफलिवृपॄकृजॄलम्बिमञ्जिपीविहन्यञ्जिमञ्जिगञ्यर्तिभ्य ऊषः ।
५६१ कोरदूषाटरूषकारूषशैलूषपिञ्जूषादयः ।
५६२ कलेर्मषः ।

५६३ कुलेश्च माषक्।

५६४ मावावद्यमिकमिहनिमानिकष्यश्चिपचिमुच्चियजिवृतृभ्यः सः।

५६५ व्यवाभ्यां तनेरीच्च वेः।

५६६ प्लुषेः प्लष् च।

५६७ ऋजिरिपिकुपिकृतिव्रश्च्युन्दिशृभ्यः कित्।

५६८ गुधिगृधेस्त च।

५६९ तप्यणिपन्यल्यचिरधिनभिनम्यमिचमितमिचञ्च्यतिपतेरसः।

५७० स्नुवयिभ्यां णित्।

५७१ वहियुभ्यां वा।

५७२ दिवादिरभिलभ्युरिभ्यः कित्।

५७३ फनसतामरसादयः।

५७४ गुबलिभ्यामासः।

५७५ क्लिलेः कित्।

५७६ तलिकसिभ्यामीसण्।

५७७ सेडित्।

५७८ त्रपेरुसः।

५७९ पटिवीभ्यां टिसडिसौ।

५८० तसः।

५८१ इणः।

५८२ पीङो नसक्।

५८३ कृकुरिभ्यां पासः।

५८४ कलिकुलिभ्यां मासक्।

५८५ अलेरक्तुसः।

५८६ लूगो ह्रः।

५८७ कितो गे च।
५८८ हिंसेः सिम् च।
५८९ कृपृ कटिपटिमटि-
लटिललिपलिक-
ल्यनिरगिलगेरहः।
५९० पुलेः कित्।
५९१ वृकटिशमिभ्य
आहः।
५९२ विलेः कित्।
५९३ निर इण ऊहश्।
५९४ दस्त्यूहः।
५९५ अनेरोकहः।
५९६ वलेरक्षः।
५९७ लाक्षाद्राक्षामि-
क्षादयः।
५९८ समिणनिकषि-
भ्यामाः।
५९९ दिविपुरिवृपिमृ-
पिभ्यः कित्।
६०० वेः साहाभ्याम्।
६०१ वृमिथिदिशिभ्य-
स्थयथ्याश्चान्ताः।
६०२ मुचिस्वदेर्ध च।
६०३ सोर्ब्रूग आह च।
६०४ सनिक्षमिदुषेः।
६०५ डित्।
६०६ स्वरेभ्य इः।
६०७ पदिपठिपचिस्थ-
लिहलिकलिवलि-
वलिवल्लिपल्लिक-
टिचटिवटिवधि-
गाध्यर्चिवन्दिन-
न्द्यविवशिवाशि-
वाकाग्निछर्दितत्रि-
मन्त्रिखण्डिमण्डि
चण्डियत्यञ्जिम-
स्यसिवनिध्वनि-
सनिगामितमिग्र-

न्थिश्रन्थिजनिमण्यादिभ्यः।

६०८ किलिपिलिपिशिचिटित्रुटिशुण्ठितुण्डकुण्डभण्डहुण्डहिण्डपिण्डचुल्लिबुधिमिथिरुहिदिविकीर्त्यादिभ्यः।

६०९ नाम्युपान्त्यकृगृशॄपूॄभ्यः कित्।

६१० विदिवृतेर्वा।

६११ तॄभ्रम्यद्यापिदम्भिभ्यस्तित्तिरभृमाधापदेमाश्च।

६१२ मनेरुदेतौ चास्य वा।

६१३ क्रमितमिस्तम्भेरिच नमेस्तु वा।

६१४ अग्निकुण्ठकम्प्यंहिभ्यो न लुक् च।

६१५ उभेर्द्रुत्रौ च।

६१६ नीवीप्रह्वभ्यो डित्।

६१७ वौ रिचेः स्वरान्नोऽन्तश्च।

६१८ कमिवमिजमिघसिशलिफलितलितडिवजिव्रजिध्वजिराजिपणिवणिवदिसदिहदिहनिसहिवहितपिवपिभटिकश्विसंपतिभ्यो णित्।

६१९ कृशॄकुटिग्रहिखन्यणिकष्यलिपलिचरिवसिगण्डिभ्यो वा।

६२० पादाचालयजि-
भ्याम् ।
६२१ नहेर्भं च ।
६२२ अशो रश्चादिः ।
६२३ कायः किरिच्च वा ।
६२४ वर्द्धेरक्रिः ।
६२५ सनेर्डस्त्रिः ।
६२६ कोर्डिस्त्रिः ।
६२७ मृश्विकण्यणिद-
ध्यविभ्य ईचिः ।
६२८ वेगो डित् ।
६२९ वर्णेर्णित् ।
६३० कृपिशकिभ्या-
मटिः ।
६३१ ओर्ढिः ।
६३२ चमेरुचान्तः ।
६३३ मुपेरुण् चान्तः ।
६३४ कावावीकीश्रिश्रु-
क्षुज्वरितूरिचूरि
पूरिभ्यो णिः ।
६३५ ऋदृघृसृकुवृषिभ्यः
कित् ।
६३६ घृषिहृषिभ्यां
वृद्धिश्च ।
६३७ हूर्णिघूर्णिभूर्णि-
घूण्यादयः ।
६३८ ऋहसृमृधृभृकृतृ
ग्रहेरणिः ।
६३९ कङ्केरिच्चास्य वा ।
६४० ककेर्णित् ।
६४१ कृषेश्च चादेः ।
६४२ क्षिपेः कित् ।
६४३ आङः कृहशुपेः
सनः ।
६४४ वारिसर्यादेरि-
णिक् ।
६४५ अदेस्त्रीणिः ।
६४६ प्लुज्ञायजिद्यपिप-

दिवसितसिभ्यस्तिः ।
६४७ प्रथेर्लुक् च वा ।
६४८ कोर्यषादिः ।
६४९ ग्रो गृष् च ।
६५० सोरस्तेः शित् ।
६५१ हृमुषिकृषिरिषिविषिशोशुच्यसिपूयीणप्रभृतिभ्यः कित् ।
६५२ कुच्योर्नोऽन्तश्च ।
६५३ खल्यमिरमिवहिवस्यर्तेरतिः ।
६५४ हन्तेरंह् च ।
६५५ वृगो व्रत च ।
६५६ अञ्चेः क च वा ।
६५७ वातेर्णिद्वा ।
६५८ योः कित् ।
६५९ पातेर्वा ।
६६० अगिविलिपुलिक्षिपेरस्तिक् ।
६६१ गृधेर्गभ् च ।
६६२ वस्यर्तिभ्यामातिः ।
६६३ अभेर्यामाभ्याम् ।
६६४ यजो य च ।
६६५ वद्यविच्छदिभूभ्योऽन्तिः ।
६६६ शकेरुन्तिः ।
६६७ नञो दागो ङितिः ।
६६८ देङः ।
६६९ वीसञ्ज्यसिभ्यस्थिक् ।
६७० सारेरथिः ।
६७१ निषञ्जेर्घित् ।
६७२ उदर्त्तेर्णिद्वा ।
६७३ अतेरिथिः ।
६७४ तनेर्डित् ।
६७५ उपेरधिः ।

६७६ विदो रधिक्।

६७७ वीयुसुवह्यगिभ्यो निः।

६७८ धूशाशीङो ह्रस्वश्च।

६७९ लूधूप्रच्छिभ्यः कित्।

६८० सदिवृत्यमिधम्य-श्यटिकटयवेरनिः।

६८१ रञ्जेः कित्।

६८२ अर्तेरत्निः।

६८३ एधेरिनिः।

६८४ शकेरुनिः।

६८५ अदेर्मनिः।

६८६ दमेर्दुभिर्दुम् च।

६८७ नीसावृयुशॄवलि-दलिभ्यो मिः।

६८८ अशो रश्चादिः।

६८९ स्नर्तेरूच्चातः।

६९० कृभूभ्यां कित्।

६९१ क्वणेर्डयिः।

६९२ तङ्किवङ्कयङ्कि-मङ्कयंहिशद्यदि-सद्याशौवपिव-शिभ्यो रिः।

६९३ भूसूकुशिविशि-शुभिभ्यः कित्।

६९४ जृषो रश्च वः।

६९५ कुण्ड्रिकुद्यादयः।

६९६ राशादिशाकिकद्य-दिभ्यस्त्रिः।

६९७ पतेरत्रिः।

६९८ नदिवल्ल्यर्तिकृ-तेररिः।

६९९ मस्यसिघसिजस्य-ङ्गिसहिभ्य उरिः।

७०० मुहेः कित्।

७०१ धूसूभ्यां लिक् लिणौ ।

७०२ पाट्यञ्जिभ्यामलिः ।

७०३ मासालिभ्यामोकुलिमली ।

७०४ दृपृवभ्यो विः ।

७०५ जृशृस्तृजागृकृनीघृषिभ्योऽङित् ।

७०६ छविछिविस्फविस्फिविस्थविस्थिविदविदीविकिकिविदिदिविदीदिविकिकीदिविकिकिदीविशिव्यटव्यादयः ।

७०७ प्रुषिप्लुषिशुषिकुष्यसिभ्यः सिक् ।

७०८ गोपादेरनेरसिः ।

७०९ वृधृपृवृसाभ्यो नसिः ।

७१० व्रियो ह्रिक् ।

७११ तृस्तृतन्द्रितन्त्र्यविभ्य ईः ।

७१२ नडेर्णित् ।

७१३ वातात् प्रमः कित् ।

७१४ यापाभ्यां द्वे च ।

७१५ लक्षेर्मोऽन्तश्च ।

७१६ भूमृतृत्सरितनिधन्यनिमनिमस्जिशीवटिकटिपटिगडिचञ्च्यसिवसित्रपिशृस्वृसिनहिक्लिदिकन्दीन्दिविन्ध्यन्धिबन्ध्यणि लोष्टि कुन्थिभ्य उः ।

७१७ स्यन्दिसृजिभ्यां

सिन्धुरज्जौ च।
७१८ पंसेर्दीर्घश्च।
७१९ अशेरान्नोऽन्तश्च।
७२० नमेर्नक् च।
७२१ मनिजनिभ्यां धतौ च।
७२२ अर्जेर्ऋज् च।
७२३ कृतेस्तर्क् च।
७२४ नेरञ्चेः।
७२५ किमः श्रो णित्।
७२६ मिवहिचरिचटिभ्यो वा।
७२७ ऋतॄशॄमॄभ्रादिभ्यो रोलश्च।
७२८ कृकस्थूराद्रूचः क् च।
७२९ पॄकाहृषिधृषीषिकुहिभिदिविदिमृदिव्यधिगृध्यादिभ्यः कित्।
७३० रभिप्रथिभ्यामृच्च रस्य।
७३१ स्पशिभ्रस्जेः स्लुक् च।
७३२ दुःस्वपवनिभ्यः स्थः।
७३३ हनियाकृभृपॄतॄत्रो द्वे च।
७३४ कॄग्र ऋत उर् च।
७३५ पचेरिच्चातः।
७३६ अर्तेरूर्च।
७३७ महत्युर्च।
७३८ उड् च भे।
७३९ श्लिपेः क च।
७४० रङ्घिलङ्घिलिङ्गेर्नलुक् च।
७४१ पीमृगमित्रदेवकुमारलोकधर्मवि-

श्वसुन्नाश्मा-
वेभ्यो युः ।
७४२ पराङ्भ्यां शृस्व-
निभ्यां डित् ।
७४३ शुभेः स च वा ।
७४४ धुद्रुभ्याम् ।
७४५ हरिपीतमितशत-
विकुकदूभ्यो द्रुवः ।
७४६ केवयुभुरण्ख्यध्व-
र्वादयः ।
७४७ शाः सन्वच्च ।
७४८ तनेर्डउः ।
७४९ कैशीशमिरमि-
भ्यः कुः ।
७५० ह्रियः किद्रो लश्च
वा ।
७५१ किरः ष च ।
७५२ चटिकठिपर्दिभ्य
आकुः ।
७५३ सिविकुटिकुठि-
कुकुषिकृषिभ्यः
कित् ।
७५४ उपसर्गाच्चेर्डित् ।
७५५ शलेरङ्कुः ।
७५६ सृपृभ्यां दाकुक् ।
७५७ इषेः स्वाकुक् च ।
७५८ फलिवल्यमेर्गुः ।
७५९ दमेर्लुक् च ।
७६० हेर्हिन् च ।
७६१ प्रीकैपैनीलेरङ्गुक् ।
७६२ अत्यर्तिगृभ्योऽड्डुः ।
७६३ शलेराड्डुः ।
७६४ अञ्ज्यवेरिष्ठुः ।
७६५ तमिमनिकणि-
भ्यो ड्डुः ।
७६६ पनेर्दीर्घश्च ।
७६७ पलिमृभ्यामाण्डु-
कण्डुकौ ।

७६८ अजिस्था-
वृरीभ्यो णुः ।
७६९ विषेः कित् ।
७७० क्षिपेरणुक् ।
७७१ अञ्जेरिष्णुः ।
७७२ कृहृभूजीविग-
म्यादिभ्य एणुः ।
७७३ कृसिकम्यमिग-
मितनिमनिज-
न्यसिमसिसच्य-
विभाधागाग्ला-
म्लाहनिहायाहि-
क्रुशिपूभ्यस्तुन् ।
७७४ वसेर्णिद्वा ।
७७५ पः पीप्यौ च वा ।
७७६ अपोऽप् च ।
७७७ अञ्जयतेः कित् ।
७७८ चायः के च ।
७७९ वहिमहि गुह्ये-
धिभ्योऽतुः ।
७८० कृलाभ्यां कित् ।
७८१ तनेर्यतुः ।
७८२ जीवेरातुः ।
७८३ यमेर्दुक् ।
७८४ शीङो धुक् ।
७८५ धूगो धुन् च ।
७८६ दाभाभ्यां नुः ।
७८७ धेः शित् ।
७८८ सूङः कित् ।
७८९ हो जह् च ।
७९० वचेः कगौ च ।
७९१ कृहनेस्तुक्नुकौ ।
७९२ गमेः सन्वच्च ।
७९३ दाभूक्षण्युन्दिन-
दिवदिपत्यादेरनुङ् ।
७९४ कृशेरानुक् ।
७९५ जीवेरदानुक् ।
७९६ वचेरक्नुः ।

७९७ हृषिपुषिग्रुषिगदिमदिनन्दिगण्डिमण्डिजनिस्तनिभ्यो णेरित्नुः।

७९८ कस्यर्तिभ्यामिपुक्।

७९९ कम्यमिभ्यां वुः।

८०० अभ्रेरमुः।

८०१ यजिशुन्धि दहिदसिजनिमनिभ्यो युः।

८०२ भुजेः कित्।

८०३ सर्तेररवन्यू।

८०४ भूक्षिपिचरेरन्युक्

८०५ मुस्त्युक्।

८०६ चिनीपीभ्यशिभ्यो रुः।

८०७ रुपूभ्यां कित्।

८०८ खनो लुक् च।

८०९ जनिहनिशायर्तेस्त च।

८१० श्मनः शीङो डित्।

८११ शियुगेरुनमेवादयः।

८१२ कटिकुट्यर्तेररुः।

८१३ कर्केरारुः।

८१४ उर्वेरादेरूदेतौ च।

८१५ कृपि क्षुधिपीकुणिभ्यः कित्।

८१६ श्यः शीत च।

८१७ तुम्बेररुः।

८१८ कन्देः कुन्दु च।

८१९ चमेरूरुः।

८२० शीङो लुः।

८२१ पीङः कित्।

८२२ लस्जीर्ष्यिशलेरालुः।

८२३ आपोऽए च।

८२४ गृहलुगुग्गुलुक-

मण्डलच:।

८२५ प्रः शुः।

८२६ मस्जीष्यशिभ्यः सुक्।

८२७ तृपलिमलेरक्षुः।

८२८ उलेः किल्।

८२९ कृपिचमितनिधन्यन्दिसर्जिखर्जिभर्जिलस्जीर्ष्यिभ्य ऊः।

८३० फलेः फेल् च।

८३१ कषेपर्डच्छौ च ष।

८३२ वहेर्ध च।

८३३ मृजेर्गुणश्च।

८३४ अजेर्जोऽन्तश्च।

८३५ कसिपद्यत्यर्दिभ्यो णित्।

८३६ अणेर्डोऽन्तश्च।

८३७ अडो ल् च वा।

८३८ नञो लम्वेर्नलुक् च।

८३९ कफादीरेल् च।

८४० ऋतो रल् च।

८४१ हभिचपेः स्वरान्नोऽन्तश्च।

८४२ धृषेर्दिधिषदिधीषौ च।

८४३ अभिगभितनिभ्यो डित्।

८४४ नृतिशृधिरुषिकुहिभ्यः कित्।

८४५ तृखडिभ्यां डूः।

८४६ तृदृभ्यां दूः।

८४७ कमिजनिभ्यां बूः।

८४८ शाकेरत्धूः।

८४९ कृगः कादिः।

८५० योरागूः।

८५१ काच्छीडो डेरूः।

८५२ दिव ऋः ।
८५३ सोरसेः ।
८५४ नियो डित् ।
८५५ सख्यात्स्थः ।
८५६ यतिननन्दिभ्यां दीर्घश्च ।
८५७ शासिशंसिनीरुक्षुहृभृधृमन्यादिभ्यस्तृः ।
८५८ पातेरिच ।
८५९ मानिभ्राजेर्लुक् च ।
८६० जाया भिगः ।
८६१ आपोऽप् च ।
८६२ नमेः प च ।
८६३ हुपूगगोन्नीप्रस्तुप्रतिहृप्रतिप्रस्थाभ्य ऋत्विजि ।
८६४ नियः षादिः ।
८६५ त्वष्टृक्षत्तृदुहित्रादयः ।
८६६ रातेर्डैः ।
८६७ द्युगमिभ्यां डोः ।
८६८ ग्लानुदिभ्यां डोः ।
८६९ तोः किक् ।
८७० द्रागादयः ।
८७१ स्तोश्चिक् ।
८७२ तनेड्वच् ।
८७३ पारेरज् ।
८७४ ऋधिपृथिभिषिभ्यः कित् ।
८७५ भृपणिभ्यामिज् भुरवणौ च ।
८७६ वशेः कित् ।
८७७ लङ्घेरद् नलुक् च ।
८७८ सर्तेरड् ।
८७९ ईडेरविड् ह्रस्वश्च ।
८८० किवपि म्लेच्छश्च वा ।

८८१ तृपेः कत्।
८८२ संश्चद्वेहत्साक्षादादयः।
८८३ पटच्छपदादयोऽनुकरणाः।
८८४ द्रुहिवृहिमहिधृपिभ्यः कतृः।
८८५ गमेर्डिदुद्वे च।
८८६ भातेर्डवतु।
८८७ हृसृरुहियुपितडिभ्य इत्।
८८८ उदकाच्छ्वेर्डित्।
८८९ ग्र उत्।
८९० ग्रो मादिर्वा।
८९१ शक्तेर्ऋत्।
८९२ यजेः क च।
८९३ पातेः कृथ्।
८९४ शृदृभसेरद्।
८९५ तनित्यजियजिभ्यो डद्।
८९६ इणस्तद्।
८९७ प्रः सद्।
८९८ द्रो हस्वश्च।
८९९ युष्यसिभ्यां क्मद्।
९०० उक्षितक्ष्यक्षीशिराजिधन्विपञ्चिपूषिक्लिदिस्निहिनुमस्जेरन्।
९०१ लूपूयुवृषिदंशिद्युदिविप्रतिदिविभ्यः कित्।
९०२ श्वन्मातरिश्वन्मूर्धन्प्लीहन्नर्यमन्विश्वप्सन् परिज्वन् महन्नहन्मघवन्नथर्वन्निति।
९०३ षप्य शौभ्यां तन्।
९०४ स्नामदिपद्यर्तिपृ-

शकिभ्यो वन्।

९०५ ग्रहेरा च।

९०६ ऋशीकुशिरुहि-जिक्षिद्विसृधृहभ्यः क्वनिप्।

९०७ सृजेः स्रज्सृकौ च।

९०८ ध्याप्योर्धीपी च।

९०९ अतेर्ध च।

९१० प्रात्सदिरीरिण-स्तोऽन्तश्च।

९११ मन्।

९१२ कुष्युपिसृपिभ्यः कित्।

९१३ बृंहेर्नोऽच्च।

९१४ ध्येग एदोतौ च वा।

९१५ स्यतेरी च वा।

९१६ सात्मनन्नात्मन्वे-मन्नोमन्क्षोमन् ललामन्नाम-न्पाप्मन्पक्ष्मन् यक्ष्मन्निति।

९१७ हृजनिभ्यामिमन्।

९१८ सृहृभृधृस्तृसूभ्य ईमन्।

९१९ गमेरिन्।

९२० आङश्च णित्।

९२१ सुवः।

९२२ भुवो वा।

९२३ प्रप्रतेर्यावुधिभ्याम्।

९२४ प्रात् स्थः।

९२५ परमात् कित्।

९२६ पथिमन्थिभ्याम्।

९२७ होर्मिन्।

९२८ अर्तेर्मुक्षिनक्।

९२९ अदेस्त्रिन्।

९३० पतेरत्रिन्।

९३१ आपः क्विप् ह्रस्व श्च।

९३२ ककुप्त्रिष्टुबनुष्टुभः ।

९३३ अवेर्मः ।

९३४ सोरेतेरम् ।

९३५ नशिनूभ्यां नक्तनूनौ च ।

९३६ स्यतेर्णित् ।

९३७ गमिजमिक्षमिकमिशमिसमिभ्यो डित् ।

९३८ इणो दमक् ।

९३९ कोर्डिम् ।

९४० तूषेरीम् णोऽन्तश्च ।

९४१ ईङ्कमिशमिसमिभ्यो डित् ।

९४२ क्रमिगमिक्षमेस्तुमाच्चातः ।

९४३ गॄपॄदुर्विधुर्विभ्यः क्विप् ।

९४४ चाद्ग्रीरौ ।

९४५ प्रादतेरर् ।

९४६ सोरर्त्तेर्लुक् च ।

९४७ पूसन्यमिभ्यः पुनसनुतान्ताश्च ।

९४८ चतेरुर् ।

९४९ दिवेर्डिव् ।

९५० विश्विविपाशिभ्यां क्विप् ।

९५१ सहेः षष् च ।

९५२ अस् ।

९५३ पाहाकृभ्यां पयह्रौ च ।

९५४ छदिवहिभ्यां छन्दोघौ च ।

९५५ श्वेः शव् च वा ।

९५६ विश्वाद्विदिभुजिभ्याम् ।

९५७ चायेर्नो ह्रस्वश्च वा ।

९५८ अशेर्यश्चादिः।
९५९ उषेर्जं च।
९६० स्कन्देर्धं च।
९६१ अवेर्वा।
९६२ अमेर्भहौ चान्तौ।
९६३ अदेरन्ध च वा।
९६४ आपोऽपाप्ताप्सराञ्जाश्च।
९६५ उच्यञ्चेः क च।
९६६ अञ्ज्यजियुजिभृजेर्गं च।
९६७ अर्तेरुराश्यौ च।
९६८ येन्धिभ्यां यादेधौ च।
९६९ चक्षः शिद्वा।
९७० वस्त्यगिभ्यां णित्।
९७१ मिथिरञ्ज्युषितृपृशृभूवष्टिभ्यः कित्।
९७२ विधेर्वा।
९७३ नुवो धथादिः।
९७४ वयःपयःपुरोरेतोभ्यो धागः।
९७५ नञ ईहेरेहेधौ च।
९७६ विहायस्सुमनस्पुरुदंशसपुरूरवोऽङ्गिरसः।
९७७ पातेर्जस्थसौ।
९७८ स्रुरीभ्यां तस्।
९७९ अर्तीण्भ्यां नस्।
९८० रिचेः क च।
९८१ रीवृभ्यां पस्।
९८२ शीङः फस् च।
९८३ पचिवचिभ्यां सस्।
९८४ इणस्तशास्।
९८५ वष्टेः कनस्।
९८६ चन्दो रमस्।
९८७ दमेरुनसूनसौ।

९८८ इण आस्।

९८९ रुच्यर्चिशुचिहुसृपिछादिछृदिभ्य इस्।

९९० बंहि बृंहेर्नलुक् च।

९९१ द्युनेरादेश्च जः।

९९२ सहेर्ध च।

९९३ पस्थोऽन्तश्च।

९९४ नियो डित्।

९९५ अवेर्णित्।

९९६ तुभूस्तुभ्यः कित्।

९९७ रुच्यर्तिजनितनिधनिमनिग्रन्थिपृतपित्रपिवपियजिभ्रादिवेपिभ्य उस्।

९९८ इणो णित्।

९९९ दुषेर्डित्।

१००० मुहिमिथ्यादेः कित्।

१००१ चक्षेः शिद्वा।

१००२ पातेर्डुम्सुः।

१००३ न्युद्भ्यामञ्चेः ककाकैसष्टावच्च।

१००४ शमो नियो डैस् मलुक् च।

१००५ यमिदमिभ्यां डोस्।

१००६ अनसो वहेः क्विप् सश्च डः।

इत्याचार्य श्रीहेमचन्द्रकृतानि उणादिगणसूत्राणि परिसमाप्तानि।

तृतीय पादः ।

१ वत्स्यंति गम्यादिः।
२ वा हेतुसिद्धौ क्तः।
३ कषोऽनिटः ।
४ भविष्यन्ती ।
५ अनद्यतने श्वस्तनी।
६ परिदेवने ।
७ पुरायावतोर्वर्त्त-
माना ।
८ कदाकर्ह्योर्नवा ।
९ किंवृत्ते लिप्सा-
याम् ।
१० लिप्स्यसिद्धौ ।
११ पञ्चम्यर्थहेतौ ।
१२ सप्तमी चोर्ध्व-
मौहूर्त्तिके ।
१३ क्रियायां क्रिया-
र्थायां तुमूणकच्-
भविष्यन्ती ।
१४ कर्मणोऽण् ।
१५ भाववचनाः ।
१६ पदरुजविशस्पृशो
घञ् ।
१७ सर्त्तेः स्थिरव्या-
धिबलमत्स्ये ।
१८ भावाऽकर्त्रोः ।
१९ इङोऽपादाने तु
टिद्वा ।
२० श्रो वायुवर्णनि-
वृत्ते ।
२१ निरभेः पूल्वः ।
२२ रोरुपसर्गात् ।
२३ भूश्यदोऽल् ।
२४ न्यादो नवा ।
२५ संनिव्युपाद्यमः ।
२६ नेर्नदगदपठस्वन-
क्वणः ।
२७ वैणे क्वणः ।

२८ युवर्णवृदृवशरण-
गमृद्ग्रहः ।
२९ वर्षादयः क्लीबे ।
३० समुदोऽजः पशौ ।
३१ सृग्लहः प्रजनाक्षे ।
३२ पणेर्माने ।
३३ संमदप्रमदौ हर्षे ।
३४ हनोऽन्तर्घनान्त-
र्घणौ देशे ।
३५ प्रघणप्रघाणौ
गृहांशे ।
३६ निघोद्घसङ्घोद्घ-
नाऽपघनोपघ्नं
निमित्तप्रशस्त-
गणात्याधानाङ्गा-
सन्नम् ।
३७ मूर्त्तिनिचिताऽभ्रे
घनः ।
३८ व्ययोद्रोः करणे ।
३९ स्तम्बाद् घ्नश्च ।
४० परेर्घः ।
४१ ह्वः समाह्वयाह्वयौ
द्यूतनाम्नोः ।
४२ न्यभ्युपवेर्वाश्चोत् ।
४३ आङो युद्धे ।
४४ आह्वावो निपानम् ।
४५ भावेऽनुपसर्गात् ।
४६ हनो वा वध् च ।
४७ व्यधजपमद्भ्यः ।
४८ नवा क्वणयमह-
सस्वनः ।
४९ आङो रुप्लोः ।
५० वर्षविघ्नेऽवाद्
ग्रहः ।
५१ प्राद्रश्मितुलासूत्रे ।
५२ वृगो वस्त्रे ।
५३ उदः श्रेः ।
५४ युपद्रोर्घञ् ।

५५ ग्रहः ।
५६ न्यवाच्छापे ।
५७ प्राल्लिप्सायाम् ।
५८ समो मुष्टौ ।
५९ युदुद्रोः ।
६० नियश्चानुपसर्गाद्वा ।
६१ वोदः ।
६२ अवात् ।
६३ परेर्द्यूते ।
६४ भुवोऽवज्ञाने वा ।
६५ यज्ञे ग्रहः ।
६६ संस्तोः ।
६७ प्रात् स्नुद्रुस्तोः ।
६८ अयज्ञे स्त्रः ।
६९ वेरशब्दे प्रथने ।
७० छन्दो.नाम्नि ।
७१ क्षुश्रोः ।
७२ न्युदो ग्रः ।
७३ किरो धान्ये ।
७४ नेर्नुः ।
७५ इणोऽभ्रेषे ।
७६ परेः क्रमे ।
७७ व्युपाच्छीङः ।
७८ हस्तप्राप्ये चेरस्तेये ।
७९ चितिदेहावासोपसमाधानेकश्चादेः ।
८० सङ्घेऽनूर्ध्वे ।
८१ माने ।
८२ स्थादिभ्यः कः ।
८३ ट्वितोऽथुः ।
८४ ड्वितस्त्रिमक् तत्कृतम् ।
८५ यजिस्वपिरक्षियतिप्रच्छो नः ।
८६ विच्छो नङ् ।
८७ उपसर्गाद्दः किः ।
८८ व्याप्यादाधारे ।

८९ अन्तर्द्धिः ।
९० अभिव्याप्तौ भा-
वेऽनञिन् ।
९१ स्त्रियां क्तिः ।
९२ श्वादिभ्यः ।
९३ समिणासुगः ।
९४ सातिहेतियूतिजू-
तिज्ञप्तिकीर्त्तिः ।
९५ गापापचो भावे ।
९६ स्थो वा ।
९७ आस्यटिव्रज्यजः
क्यप् ।
९८ भृगो नाम्नि ।
९९ समजनिपन्निष-
दृशीङ्सुग्विदि-
चरिमनीणः ।
१०० कृगः श च वा ।
१०१ मृगयेच्छायाच्ञा-
तृष्णाकृपाभाश्र-
द्धाऽन्तर्द्धा ।
१०२ परेः सृचरेर्यः ।
१०३ वाऽटाटयात् ।
१०४ जागुरश्च ।
१०५ शंसिप्रत्ययात् ।
१०६ क्तेटोगुरोर्व्यञ्ज-
नात् ।
१०७ षितोऽङ् ।
१०८ भिदादयः ।
१०९ भीषिभूषिचिन्ति-
पूजिकथिकुम्बि-
चर्चिस्पृहितोलि-
दोलिभ्यः ।
११० उपसर्गादातः ।
१११ णिवेत्त्यासश्रन्थ-
घट्टवन्देरनः ।
११२ इषोऽनिच्छायाम् ।
११३ पर्यधेर्वा ।
११४ क्रुत्संपदादिभ्यः
क्विप् ।
११५ भ्यादिभ्यो वा ।

